स्वाहा॥१८॥ ॐ नमो शुष्पिञ्जराय त्विषीमते पथीनां पतये नमः स्वाहा॥१९॥ ॐ नमो हरिकेशायोपवीतिनै पुष्टानां पतये नमः स्वाहा॥२०॥ ॐ नमो बभ्लुशाय व्याधिनेऽन्नानां पतये नमः स्वाहा॥२१॥ ॐ नमो भुवस्य हेत्यै जगतां पतये नमः स्वाहा॥२२॥ ॐ नमो रुद्रायाततायिने क्षेत्राणां पतये नमः स्वाहा॥२३॥ ॐ नमो सूतायाहन्त्यै वनानां पतये नमः॥२४॥ ॐ नमो रोहिताय स्थपतये वृक्षाणां पतये नमः स्वाहा॥२५॥ ॐ नमो भुवन्तयै वारिवस्कृतायौषधीनां नमः स्वाहा॥२६॥ ॐ नमो मन्त्रिणै वाणिजाय कक्षाणां पतये नमः स्वाहा॥२७॥ ॐ नमऽ उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः स्वाहा॥२८॥ ॐ नमः कृत्स्नायतया धावते सत्वनां पतये नमः स्वाहा॥२९॥ ॐ नमः सहमानाय निव्याधिने आव्याधिनीनां पतयेनमः स्वाहा॥३०॥ ॐ नमो निषङ्गिणै ककुभाय स्तेनानां पतये नमः स्वाहा॥३१॥ ॐ नमो निचेरवै परिचरायारण्यानां पतये नमः स्वाहा॥३२॥ ॐ नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः स्वाहा॥३३॥ ॐ नमो निषङ्गिणऽ इषुधिमते तस्कराणां पतये नमः स्वाहा॥३४॥ ॐ नमः सृकायिभ्यो जिघांᳬसद्भ्यो मुष्णतां पतये नमः स्वाहा॥३५॥ ॐ नमोऽसिमद्भ्योनक्तंचरद्भ्यो विकृन्तानां पतये नमः स्वाहा॥३६॥ ॐ नमऽ उष्णीषिणै गिरिचराय कुलुञ्चानां पतये नमः स्वाहा॥३७॥ ॐ नमऽ इषुमद्भ्यो धन्वायिभ्यश्च वो नमः स्वाहा॥३८॥ ॐ नमऽ आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः स्वाहा॥३९॥ ॐ नमऽ आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः स्वाहा॥४०॥ ॐ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमः स्वाहा॥४१॥ ॐ नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः स्वाहा॥४२॥ ॐ नमः शयानेभ्य आसीनेभ्यश्च वो नमः स्वाहा॥४३॥ ॐ नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः स्वाहा॥४४॥ ॐ नमः सभाभ्यः सभापतिभ्यश्च वो नमः स्वाहा॥४५॥ ॐ नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमः स्वाहा॥४६॥ ॐ नमऽ आव्याधिनीभ्यो विविध्यन्तीभ्यश्च

वो नमः स्वाहा॥४७॥ ॐ नमऽ उगणाभ्यस्तृᳪं हुतीभ्यश्च वो नमः स्वाहा॥४८॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमः स्वाहा॥४९॥ ॐ नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः स्वाहा॥५०॥ ॐ नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः स्वाहा॥५१॥ ॐ नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः स्वाहा॥५२॥ ॐ नमः सेनाभ्यः सेनानिभ्यश्च वो नमः स्वाहा॥५३॥ ॐ नमो रथिभ्यो अरथेभ्यश्च वो नमः स्वाहा॥५४॥ ॐ नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमः स्वाहा॥५५॥ ॐ नमो महद्भ्यो अर्भकेभ्यश्च वो नमः स्वाहा॥५६॥ ॐ नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः स्वाहा॥५७॥ ॐ नमो कुलालेभ्यः कर्मारेभ्यश्च वो नमः स्वाहा॥५८॥ ॐ नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमः स्वाहा॥५९॥ ॐ नमो श्वनिभ्यो मृगयुभ्यश्च वो नमः स्वाहा॥६०॥ ॐ नमः श्वभ्यः श्वपतिभ्यश्च वो नमः स्वाहा॥६१॥ ॐ नमो भवाय च रुद्राय च स्वाहा॥६२॥ ॐ नमः शर्वाय च पशुपतये च नमः स्वाहा॥६३॥ ॐ नमो नीलग्रीवाय च शितिकण्ठाय च नमः स्वाहा॥६४॥ ॐ नमः कपर्दिने च व्युप्तकेशाय च स्वाहा॥६५॥ ॐ नमः सहस्राक्षाय च शतधन्वने च स्वाहा॥६६॥ ॐ नमो गिरिशयाय च शिपिविष्टाय च स्वाहा॥६७॥ ॐ नमो मीढुष्टमाय चेषुमते च स्वाहा॥६८॥ ॐ नमो ह्रस्वाय च वामनाय च स्वाहा॥६९॥ ॐ नमो बृहते च वर्षीयसे च स्वाहा॥७०॥ ॐ नमो वृद्धाय च सवृधे च स्वाहा॥७१॥ ॐ नमोऽग्र्याय च प्रथमाय च स्वाहा॥७२॥ ॐ नमऽ आशवे चाजिराय च स्वाहा॥७३॥ ॐ नमः शीघ्र्याय च शीभ्याय च स्वाहा॥७४॥ ॐ नमऽ ऊर्म्याय चावस्वन्याय च स्वाहा॥७५॥ ॐ नमो नादेयाय च द्वीप्याय च स्वाहा॥७६॥ ॐ नमो ज्येष्ठाय च कनिष्ठाय च स्वाहा॥७७॥ ॐ नमः पूर्वजाय चापरजाय च स्वाहा॥७८॥ ॐ नमो मद्ध्यमाय चापगल्भाय च स्वाहा॥७९॥ ॐ नमो जघन्याय च बुद्ध्न्याय च। स्वाहा॥८०॥ ॐ नमः

सोभ्यांय च प्रतिसर्यांय च स्वाहा॥८१॥ ॐ नमो याम्यांय च क्षेम्यांय च स्वाहा॥८२॥ ॐ नमः श्लोक्यांय चावसान्याय च स्वाहा॥८३॥ ॐ नमऽ उर्वर्य्याय च खल्यांय च स्वाहा॥८४॥ ॐ नमो वन्यांय च कक्ष्यांय च स्वाहा॥८५॥ ॐ नमः श्रवाये च प्रतिश्रवार्य च स्वाहा॥८६॥ ॐ नमऽ आशुषेणाय चाशुरथाय च स्वाहा॥८७॥ ॐ नमः शूरांय चावभेदिनें च स्वाहा॥८८॥ ॐ नमो बिल्मिनें च कवचिनें च स्वाहा॥८९॥ ॐ नमो वर्मिणें च वरूथिनें च स्वाहा॥९०॥ ॐ नमः श्रुतार्य च श्रुतसेनार्य च स्वाहा॥९१॥ ॐ नमो दुन्दुभ्याय चाहनन्याय च स्वाहा॥९२॥ ॐ नमो धृष्णवें च प्रमृशार्य च स्वाहा॥९३॥ ॐ नमो निषङ्गिणें चेषुधिमतें च स्वाहा॥९४॥ ॐ नमस्तीक्ष्णेषवे चायुधिनें च स्वाहा॥९५॥ ॐ नमः स्वायुधार्य च सुधन्वने च स्वाहा॥९६॥ ॐ नमः स्रुत्यांय च पथ्यांय च स्वाहा॥९७॥ ॐ नमः काट्यांय च नीप्यांय च स्वाहा॥९८॥ ॐ नमः कुल्यांय च सरस्याय च स्वाहा॥९९॥ ॐ नमो नादेयार्य च वैशन्तार्य च स्वाहा॥१००॥ ॐ नमः कूप्यांय चाऽवट्याय च स्वाहा॥१०१॥ ॐ नमो वीध्र्याय चातप्याय च स्वाहा॥१०२॥ ॐ नमो मेघ्यांय च विद्युत्याय च स्वाहा॥१०३॥ ॐ नमो वर्ष्यांय चावर्ष्यांय च स्वाहा॥१०४॥ ॐ नमो वात्यांय च रेष्म्यांय च स्वाहा॥१०५॥ ॐ नमो वास्तव्याय च वास्तुपार्य च स्वाहा॥१०६॥ ॐ नमः सोमांय च रुद्रार्य च स्वाहा॥१०७॥ ॐ नमस्ताम्रार्य चारुणार्य च स्वाहा॥१०८॥ ॐ नमः शंगवें च पशुपतये च स्वाहा॥१०९॥ ॐ नमऽ उग्रार्य च भीमार्य च स्वाहा॥११०॥ ॐ नमोऽग्रेवधार्य च दूरेवधार्य च स्वाहा॥१११॥ ॐ नमो हन्त्रे च हनीयसे च स्वाहा॥११२॥ ॐ नमो वृक्षेभ्यो हरिकेशेभ्यो स्वाहा॥११३॥ ॐ नमस्तारार्य स्वाहा॥११४॥ ॐ नमः शंभवार्य च मयोभवार्य च स्वाहा॥११५॥ ॐ नमः शंकरार्य च मयस्करार्य च स्वाहा॥११६॥ ॐ नमः शिवार्य

च शिवतराय च स्वाहा॥११७॥ ॐ नमः पार्याय चावार्याय च स्वाहा॥११८॥ ॐ नमः प्रतरणाय चोत्तरणाय च स्वाहा॥११९॥ ॐ नमस्तीर्थ्याय च कूल्याय च स्वाहा॥१२०॥ ॐ नमः शष्प्याय च फेन्याय च स्वाहा॥१२१॥ ॐ नमः सिकत्त्याय च प्रवाह्याय च स्वाहा॥१२२॥ ॐ नमः किᳬंशिलाय च क्षयणाय च स्वाहा॥१२३॥ ॐ नमः कपर्दिने च पुलस्तये च स्वाहा॥१२४॥ ॐ नमऽ इरिण्याय च प्रपथ्याय च स्वाहा॥१२५॥ ॐ नमो व्व्रज्याय च गोष्ठ्याय च स्वाहा॥१२६॥ ॐ नमस्तल्प्याय च गेह्याय च स्वाहा॥१२७॥ ॐ नमो हृदय्याय च निवेष्प्याय च स्वाहा॥१२८॥ ॐ नमः काट्याय च गह्वरेष्ठाय च स्वाहा॥१२९॥ ॐ नमः शुष्क्याय च हरित्त्याय च स्वाहा॥१३०॥ ॐ नमः पाᳬंसव्याय च रजस्याय च स्वाहा॥१३१॥ ॐ नमो लोप्याय चोलप्याय च स्वाहा॥१३२॥ ॐ नमऽ ऊर्व्याय च सूर्व्याय च स्वाहा॥१३३॥ ॐ नमः पर्णाय च पर्णशदाय च स्वाहा॥१३४॥ ॐ नमऽ उद्गुरमाणाय चाभिघ्नते च स्वाहा॥१३५॥ ॐ नमऽ आखिदते च प्रखिदते च स्वाहा॥१३६॥ ॐ नमऽ इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमः स्वाहा॥१३७॥ ॐ नमो वः किरिकेभ्यो देवानाᳬं हृदयेभ्यो स्वाहा॥१३८॥ ॐ नमो विचिन्वत्केभ्यो देवानाᳬं हृदयेभ्यः स्वाहा॥१३९॥ ॐ नमो विक्षिणत्केभ्यो देवानाᳬं हृदयेभ्यः स्वाहा॥१४०॥ ॐ नमऽ आनिर्हतेभ्यो देवानाᳬं हृदयेभ्यः स्वाहा॥१४१॥ ॐ द्रापे अन्धसस्पते दरिद्र नीललोहित। आसां प्रजानामेषां पशूनां मा भेर्मा रोङ्मो च नः किंचनाममत् स्वाहा॥१४२॥ ॐ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् स्वाहा॥१४३॥ ॐ या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी। शिवा रुतस्य भेषजी तया नो मृड जीवसे स्वाहा॥१४४॥ ॐ परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य

दुर्मतिरघायोः। अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड स्वाहा॥१४५॥ ॐ मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि स्वाहा॥१४६॥ ॐ विकिरिद्र विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्निवपन्तु ताः स्वाहा॥१४७॥ ॐ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि स्वाहा॥१४८॥ ॐ असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१४९॥ ॐ अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि। तेषाꣳसहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१५०॥ ॐ नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१५१॥ ॐ नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१५२॥ ॐ ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१५३॥ ॐ ये भूतानामधिपतयो विशिखासः कपर्दिनः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१५४॥ ॐ ये पथाम्पथिरक्षय ऐलबृदा आयुर्युधः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१५५॥ ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१५६॥ ॐ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१५७॥ ॐ य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे। तेषाꣳसहस्रयोजनेऽव धन्वानि तन्मसि स्वाहा॥१५८॥ ॐ नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः स्वाहा॥१५९॥ ॐ नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदी

चीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः स्वाहा॥१६०॥ ॐ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः स्वाहा॥१६१॥

ॐ भूः, ॐ भुवः, ॐ स्वः—ॐ वयᳪसोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचमेहि॥१॥ एष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहैष ते रुद्र भाग आखुस्ते पशुः॥२॥ अव रुद्रमदीमह्यव देवं त्र्यम्बकम्। यथा नो वस्य वस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात्॥३॥ भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम्। सुखं मेषाय मेष्यै॥४॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्। त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः॥५॥ एतत्ते रुद्राऽवसं तेन परो मूजवतोऽतीहि। अवततधन्वा पिनाकावसः कृत्तिवासा अहिᳪसन्नः शिवोऽतीहि॥६॥ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम्॥७॥ शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिᳪसीः। निवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय॥८॥ (पाठमात्रम्)

ॐ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च। सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा॥१॥ अग्निᳪ हृदयेनाशनिᳪ हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना। शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तः पर्शव्येनोग्रं देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम्॥२॥ उग्रं लोहितेन मित्रᳪ सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा। भवस्य कण्ठ्यᳪ रुद्रस्यान्तःपार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत्॥३॥ लोमभ्यः स्वाहा लोमभ्यः

स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्यः स्वाहा मेदोभ्यः स्वाहा। माꣳसेभ्यः स्वाहा माꣳसेभ्यः स्वाहा स्नावभ्यः स्वाहा स्नावभ्यः स्वाहास्थभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः स्याहा मज्जभ्यः स्वाहा। रेतसे स्वाहा पायवे स्वाहा॥४॥ आयासाय स्वाहा प्रायासाय स्वाहा संय्यासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा। शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा॥५॥ तपसे स्वाहा तप्यते स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा घर्माय स्वाहा। निष्कृत्यै स्वाहा प्रायश्चित्त्यै स्वाहा भेषजाय स्वाहा॥६॥ यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा। विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा॥७॥ (पाठमात्रम्)

ॐ वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रवश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम्॥१॥ प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम्॥२॥ ओजश्च मे सहश्च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे परूꣳषि च मे शरीराणि च म आयुश्च मे जरा च मे यज्ञेन कल्पन्ताम्॥३॥ ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् स्वाहा॥४॥ २-ॐ नमस्ते० (१६१ आहुतयः) ॐ सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे विश्वं च मे महश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम्॥१॥ ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुखं च मे शयनं च मे सूषाश्च मे सुदिनं च मे यज्ञेन कल्पन्ताम्॥२॥

यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च मे यज्ञेन कल्पन्ताम्॥३॥ शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् स्वाहा॥४॥ ३-नमस्ते० (१६१ आहुतयः) ॐ ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे यज्ञेन कल्पन्ताम्॥१॥ रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे कुयवं च मेऽक्षितं च मेऽन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम्॥२॥ वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथ्यं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम्॥३॥ व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् स्वाहा॥४॥ ४-नमस्ते० (१६१ आहुतयः) ॐ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्पन्ताम्॥१॥ अग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशव आरण्याश्च मे वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे यज्ञेन कल्पन्ताम्॥२॥ वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम् स्वाहा॥३॥ ५-नमस्ते० (१६१ आहुतयः) ॐ अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम्॥१॥ मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे धाता च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च

मे विश्वे च मे देवा इन्द्रश्च मे यज्ञेन कल्पन्ताम्॥२॥ पृथिवी च मे इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे समाश्च म इन्द्रश्च मे नक्षत्राणि च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे यज्ञेन कल्पन्ताम् स्वाहा॥३॥ ६-ॐ नमस्ते० (१६१ आहुतयः) ॐ अᳬशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाᳬशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम्॥१॥ आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्कैवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम्॥२॥ स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च म आधवनीयश्च मे वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् स्वाहा॥३॥ ७-ॐ नमस्ते० (१६१ आहुतयः) ॐ अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्करयो दिशश्च मे यज्ञेन कल्पन्ताम्॥१॥ व्रतं च म ऋतवश्च मे तपश्च मे संवत्सरश्च मेऽहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् स्वाहा॥२॥ ८-ॐ नमस्ते० (१६१ आहुतयः) ॐ एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च म एकादश च एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च म एकविᳬशतिश्च म एकविᳬशतिश्च मे त्रयोविᳬशतिश्च मे त्रयोविᳬशतिश्च मे पञ्चविᳬशतिश्च मे पञ्चविᳬशतिश्च मे सप्तविᳬशतिश्च मे सप्तविᳬशतिश्च मे नवविᳬशतिश्च मे नवविᳬशतिश्च म एकत्रिᳬशच्च म एकत्रिᳬशच्च मे त्रयस्त्रिᳬशच्च मे यज्ञेन कल्पन्ताम् स्वाहा॥१॥ ९-नमस्ते० (१६१ आहुतयः) ॐ चतस्रश्च मेऽष्टौ च मे द्वादश च मे द्वादश च

मे षोडश च मे षोडश च मे विंᳬशतिश्च मे विंᳬशतिश्च मे चतुर्विंᳬशतिश्च मे चतुर्विंᳬशतिश्च मेऽष्टाविंᳬशतिश्च मेऽष्टाविंᳬशतिश्च मे द्वात्रिंᳬशच्च मे द्वात्रिंᳬशच्च मे षट्त्रिंᳬशच्च मे षट्त्रिंᳬशच्च मे चत्वारिंᳬशच्च मे चत्वारिंᳬशच्च मे चतुश्चत्वारिंᳬशच्च मे चतुश्चत्वारिंᳬशच्च मेऽष्टाचत्वारिंᳬशच्च मे यज्ञेन कल्पन्ताम् स्वाहा॥१॥ १०-नमस्ते० (१६१ आहुतयः) ॐ त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्य्यवाट् च मे तुर्य्यौही च मे यज्ञेन कल्पन्ताम्॥१॥ पष्ठवाट् च मे षष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वांश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम् स्वाहा॥२॥

पुनः-ॐ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति। दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु॥१॥ येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः। यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु॥२॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु। यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु॥३॥ येनेदं भूतं भुवनं भविष्य त्परिगृहीतममृतेन सर्वम्। येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु॥४॥ यस्मिन्नृचः साम यजूᳬषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः। यस्मिंᳬश्चित्तᳬ सर्वमोतं प्रजानां तन्मे मनः शिव संकल्पमस्तु॥५॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव। हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु स्वाहा॥६॥

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिᳬ सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥१॥ पुरुष एवेदᳬ सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥२॥ एतावानस्य महिमातो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥३॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः। ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥४॥ ततो विराडजायत विराजो अधि

पूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥५॥ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्। पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥६॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांᳫंसि जज्ञिरे तस्माद्य जुस्तस्मादजायत॥७॥ तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥८॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये॥९॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते॥१०॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्याᳫं शूद्रो अजायत॥११॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥१२॥ नाभ्या आसीदन्तरिक्षᳫं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२॥ अकल्पयन्॥१३॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥१४॥ सप्तास्यासन्परिधयस्त्रिःसप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम्॥१५॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः स्वाहा॥१६॥

ॐ अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे। तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे॥१॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥२॥ प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते। तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा॥३॥ यो देवेभ्य आतपति यो देवानां पुरोहितः। पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये॥४॥ रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे॥५॥ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण स्वाहा॥६॥

ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः॥१॥ संक्रन्दनेनाऽनिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा॥२॥ स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन। सꣳ सृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता॥३॥ बृहस्पते परिदीया रथेन रक्षोहामित्राँअपबाधमानः। प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्॥४॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः। अभिवीरो अभिसत्त्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्॥५॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा। इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳसखायो अनु सꣳरभध्वम्॥६॥ अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु॥७॥ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्॥८॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रम्। महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात्॥९॥ उद्धर्षय मघवन्ना-युधान्युत्सत्वनां मामकानां मनाꣳसि। उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः॥१०॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु। अस्माकं वीरा उत्तरे भवन्त्वस्माँ२॥ उ देवा अवता हवेषु॥११॥ अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि। अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् स्वाहा॥१२॥

ॐ विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम्। वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति॥१॥ उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्य्यम्॥२॥ येना पावक चक्षसा भुरण्यन्तं जनाँ२॥ अनु। त्वं वरुण पश्यसि॥३॥

दैव्यावध्वर्यू आगतुँ रथेन सूर्य्यत्वचा। मध्वा यज्ञँ समञ्जाथे। तं प्रत्नथायं वेनश्चित्रं देवानाम्॥४॥ तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदुँस्वर्विदम्। प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्धसे॥५॥ अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इममपाँसङ्गमे सूर्य्यस्य शिशुनं विप्रा मतिभी रिहन्ति॥६॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्यवरुणस्याग्नेः। आप्राद्यावापृथिवीऽअन्तरिक्षꣳ सूर्य्यऽआत्माजगतस्तस्थुषश्च॥७॥ आ न इडाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु। अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा॥८॥ यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य्य। सर्वं तदिन्द्र ते वशे॥९॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य। विश्वमाभासि रोचनम्॥१०॥ तत्सूर्य्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोर्विततुँ संजभार। यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै॥११॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपं कृणुते द्योरुपस्थे। अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्ध रितः संभरन्ति॥१२॥ बण्महाँ२॥ असि सूर्य्य बडादित्य महाँ२॥ असि। महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ२॥ असि॥१३॥ बट्सूर्य्य श्रवसा महाँ२॥ असि सत्रा देव महाँ२॥ असि। मह्ना देवानामसुर्य्यः पुरोहितो विभु ज्योतिरदाभ्यम्॥१४॥ श्रायन्त इव सूर्य्यं विश्वेदिन्द्रस्य भक्षत। वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम॥१५॥ अद्या देवा उदिता सूर्य्यस्य निरँहसः पिपृता निरवद्यात्। तन्नोमित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥१६॥ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा॥१७॥

११-ॐ नमस्ते० (१६१ आहुतयः) ॐ वाजाय स्वाहा प्रसवाय स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्पतये स्वाहाह्ने मुग्धाय स्वाहा मुग्धाय वैनँशिनाय स्वाहा विनँशिन आन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा। इयं ते राण्मित्राय यन्तासि

यमेन ऊर्जे त्वा वृष्टयै त्वा प्रजानां त्वाधिपत्याय॥१॥ आयुर्य्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्य्यज्ञेन कल्पताᳬ श्रोत्रं यज्ञेन कल्पतां वाग् यज्ञेन कल्पतां मनो यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां ज्योतिर्य्यज्ञेन कल्पतां स्वर्य्यज्ञेन कल्पतां पृष्ठं य्यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम्। स्तोमश्च यजुश्च ऋक् च साम च बृहच्च रथन्तरं च। स्वर्देवा अगन्मामृता अभूम प्रजापतेः प्रजा अभूम वेट् स्वाहा॥२॥

ॐ ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये। वागोजः सहौजो मयि प्राणापानौ स्वाहा॥१॥ ॐ यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु। शं नो भवतु भुवनस्य यस्पतिः स्वाहा॥२॥ ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् स्वाहा॥३॥ ॐ कया नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता स्वाहा॥४॥ ॐ कस्त्वा सत्यो मदानां मᳬहिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु स्वाहा॥५॥ ॐ अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतिभिः स्वाहा॥६॥ ॐ कया त्वं न ऊत्याभि प्रमन्दसे वृषन्। कया स्तोतृभ्य आभर स्वाहा॥७॥ ॐ इन्द्रो विश्वस्य राजति। शं नो अस्तु द्विपदे शं चतुष्पदे स्वाहा॥८॥ ॐ शं नो मित्रः शं वरुणः शं नो भवत्वर्य्यमा। शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः स्वाहा॥९॥ ॐ शं नो वातः पवताᳬ शं नस्तपतु सूर्य्यः। शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु स्वाहा॥१०॥ ॐ अहानि शं भवन्तु नः शᳬ रात्रीः प्रतिधीयताम्। शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या। शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः स्वाहा॥११॥ ॐ शं नो देवीरभिष्टय आपो भवन्तु पीतये। शं योरभिस्रवन्तु नः स्वाहा॥१२॥ ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः स्वाहा॥१३॥ ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे स्वाहा॥१४॥ ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव

मातरः स्वाहा॥१५॥ ॐ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः स्वाहा॥१६॥ ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि स्वाहा॥१७॥ ॐ दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्। मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे स्वाहा॥१८॥ ॐ दृते दृंह मा:। ज्योक्ते संदृशि जीव्यासं ज्योक्ते संदृशि जीव्यासम् स्वाहा॥१९॥ ॐ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे। अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव स्वाहा॥२०॥ ॐ नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे। नमस्ते भगवन्नस्तु यतः स्वः समीहसे स्वाहा॥२१॥ ॐ यतो यतः समीहसे ततो नो अभयं कुरु। शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः स्वाहा॥२२॥ ॐ सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः स्वाहा॥२३॥ ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् स्वाहा॥२४॥

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः॥ भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः॥१॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥२॥ अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्व शर्वेभ्यो नमस्तेऽअस्तु रुद्ररूपेभ्यः॥३॥ तत्पुरुषाय विद्महे महादेवाय धीमहि॥ तन्नो रुद्रः प्रचोदयात्॥४॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्॥ ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे ऽअस्तु सदा शिवोऽम्॥५॥ (पाठमात्रम्)

---

## अथ षडङ्गन्यासः

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमं तनोत्वरिष्टं य्यज्ञꣳ समिमं दधातु। विश्वेदेवास इह मादयन्तामों३प्रतिष्ठ। हृदयाय नमः॥१॥

ॐ अबोध्यग्निः समिधा जनानां प्रतिधेनुमिवायतीमुषासम्। यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ॥ शिरसे स्वाहा॥२॥

ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः॥ शिखायै वषट्॥३॥

ॐ मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजाऽमृते-नानुवस्ताम्। उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु॥ कवचाय हुम्॥४॥

ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वत-स्मात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः॥ नेत्रत्रयाय वौषट्॥५॥

ॐ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे॥ अस्त्राय फट्॥६॥

### ध्यानम्

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्॥ १॥
वृष वाहन! सर्प-भूषण! डमरु-बादक! शूल-धारक!।
संततं हृदि चिन्तयामि त्वामयि गङ्गाधर! चन्द्रशेखर!॥ २॥

---

# शिवसहस्त्रनामावल्या हवनम्

१. ॐ स्थिराय स्वाहा। २. ॐ स्थाणवे स्वाहा। ३. ॐ प्रभवे स्वाहा। ४. ॐ भीमाय स्वाहा। ५. ॐ प्रवराय स्वाहा। ६. ॐ वरदाय स्वाहा। ७. ॐ वराय स्वाहा। ८. ॐ सर्वात्मने स्वाहा। ९. ॐ सर्वविख्याताय स्वाहा। १०. ॐ सर्वस्मै स्वाहा। ११. ॐ सर्वकराय स्वाहा। १२. ॐ भवाय स्वाहा। १३. ॐ जटिने स्वाहा। १४ ॐ चर्मिणे स्वाहा। १५. ॐ शिखण्डिने स्वाहा। १६. ॐ सर्वाङ्गाय स्वाहा। १७. ॐ सर्वभावनाय स्वाहा। १८. ॐ हराय स्वाहा। १९. ॐ हरिणाक्षाय स्वाहा। २०. ॐ सर्वभूतहराय स्वाहा। २१. ॐ वृत्तये स्वाहा। २२. ॐ प्रभवे स्वाहा। २३. ॐ निवृत्तये स्वाहा। २४. ॐ नियताय स्वाहा। २५. ॐ शाश्वताय स्वाहा। २६. ॐ ध्रुवाय स्वाहा। २७. ॐ श्मशानवासिने स्वाहा। २८. ॐ भगवते स्वाहा। २९. ॐ खेचराय स्वाहा। ३०. ॐ गोचराय स्वाहा। ३१. ॐ आनन्दाय स्वाहा। ३२. ॐ अभिवाद्याय स्वाहा। ३३. ॐ महाकर्मणे स्वाहा। ३४. ॐ तपस्विने स्वाहा। ३५. ॐ भूतभावनाय स्वाहा। ३६. ॐ उन्मत्तवेषप्रच्छन्नाय स्वाहा। ३७. ॐ सर्वलोकप्रजापतये स्वाहा। ३८. ॐ महारूपाय स्वाहा। ३९. ॐ महाकयाय स्वाहा। ४०. ॐ वृषरूपाय स्वाहा। ४१. ॐ महायशसे स्वाहा। ४२. ॐ महात्मने स्वाहा। ४३. ॐ सर्वभूतात्मने स्वाहा। ४४. ॐ विश्वरूपाय स्वाहा। ४५. ॐ महाहनवे स्वाहा। ४६. ॐ लोकपालाय स्वाहा। ४७. ॐ अन्तर्हितात्मने स्वाहा। ४८. ॐ प्रसादाय स्वाहा। ४९. ॐ हयगर्दभये स्वाहा। ५०. ॐ पवित्राय स्वाहा। ५१. ॐ महते स्वाहा। ५२. ॐ नियमाय स्वाहा। ५३. ॐ नियमाश्रिताय स्वाहा। ५४. ॐ सर्वकर्मणे स्वाहा। ५५. ॐ स्वयम्भूताय स्वाहा। ५६. ॐ आदाये स्वाहा। ५७. ॐ आदिकराय स्वाहा। ५८. ॐ निधये स्वाहा। ५९. ॐ सहस्त्राक्षाय स्वाहा। ६०. ॐ विशालाक्षाय स्वाहा। ६१. ॐ सोमाय स्वाहा। ६२. ॐ नक्षत्रसाधकाय स्वाहा। ६३. ॐ चन्द्राय स्वाहा। ६४. ॐ सूर्याय स्वाहा। ६५. ॐ शनये स्वाहा। ६६. ॐ केतवे स्वाहा। ६७. ॐ ग्रहाय स्वाहा। ६८. ॐ ग्रहपतये स्वाहा। ६९. ॐ वराय स्वाहा। ७०. ॐ अत्रये स्वाहा। ७१. ॐ अत्र्यानमस्कर्त्रे स्वाहा। ७२. ॐ मृगवाणार्पणाय स्वाहा। ७३. ॐ अनघाय स्वाहा। ७४. ॐ महातपसे स्वाहा। ७५. ॐ घोरतपसे स्वाहा। ७६. ॐ अदीनाय स्वाहा। ७७. ॐ दीनसाधकाय स्वाहा। ७८. ॐ संवत्सराय स्वाहा। ७९. ॐ मन्त्राय स्वाहा।

८०. ॐ प्रमाणाय स्वाहा। ८१. ॐ परमतपसे स्वाहा। ८२. ॐ योगिने स्वाहा। ८३. ॐ योज्याय स्वाहा। ८४. ॐ महाबीजाय स्वाहा। ८५. ॐ महारेतसे स्वाहा। ८६. ॐ महाबलाय स्वाहा। ८७. ॐ सुवर्णरेतसे स्वाहा। ८८. ॐ सर्वज्ञाय स्वाहा। ८९. ॐ सुबीजाय स्वाहा। ९०. ॐ बीज-वाहनाय स्वाहा। ९१. ॐ दशबाहवे स्वाहा। ९२. ॐ अनिमिषाय स्वाहा। ९३. ॐ नीलकण्ठाय स्वाहा। ९४. ॐ उमापतये स्वाहा। ९५. ॐ विश्वरूपाय स्वाहा। ९६. ॐ स्वयंश्रेष्ठाय स्वाहा। ९७. ॐ बलवीराय स्वाहा। ९८. ॐ अबलाय स्वाहा। ९९. ॐ गणाय स्वाहा। १००. ॐ गणकर्त्रे स्वाहा। १०१. ॐ गणपतये स्वाहा। १०२. ॐ दिग्वाससे स्वाहा। १०३. ॐ कामाय स्वाहा। १०४. ॐ मन्त्रविदे स्वाहा। १०५. ॐ परमाय स्वाहा। १०६. ॐ मन्त्राय स्वाहा। १०७. ॐ सर्वभावकराय स्वाहा। १०८. ॐ हराय स्वाहा। १०९. ॐ कमण्डलुधराय स्वाहा। ११०. ॐ धन्विने स्वाहा। १११. ॐ बाणहस्ताय स्वाहा। ११२. ॐ कपालवते स्वाहा। ११३. ॐ अशनिने स्वाहा। ११४. ॐ शतघ्निने स्वाहा। ११५. ॐ खड्गिने स्वाहा। ११६. ॐ पट्टिशिने स्वाहा। ११७. ॐ आयुधिने स्वाहा। ११८. ॐ महते स्वाहा। ११९. ॐ स्रुवहस्ताय स्वाहा। १२०. ॐ सुरूपाय स्वाहा। १२१. ॐ तेजसे स्वाहा। १२२. ॐ तेजस्करनिधये स्वाहा। १२३. ॐ उष्णीषिणे स्वाहा। १२४. ॐ सुवक्त्राय स्वाहा। १२५. ॐ उदग्राय स्वाहा। १२६. ॐ विनताय स्वाहा। १२७. ॐ दीर्घाय स्वाहा। १२८. ॐ हरिकेशाय स्वाहा। १२९. ॐ सुतीर्थाय स्वाहा। १३०. ॐ कृष्णाय स्वाहा। १३१. ॐ शृगालरूपाय स्वाहा। १३२. ॐ सिद्धार्थाय स्वाहा। १३३. ॐ मुण्डाय स्वाहा। १३४. ॐ सर्वशुभकराय स्वाहा। १३५. ॐ अजाय स्वाहा। १३६. ॐ बहुरूपाय स्वाहा। १३७. ॐ गन्धधारिणे स्वाहा। १३८. ॐ कपर्दिने स्वाहा। १३९. ॐ ऊर्ध्वरेतसे स्वाहा। १४०. ॐ ऊर्ध्वलिङ्गाय स्वाहा। १४१. ॐ ऊर्ध्वशायिने स्वाहा। १४२. ॐ नभस्थलाय स्वाहा। १४३. ॐ त्रिजटाय स्वाहा। १४४. ॐ चीरवाससे स्वाहा। १४५. ॐ रुद्राय स्वाहा। १४६. ॐ सेनापतये स्वाहा। १४७. ॐ विभवे स्वाहा। १४८. ॐ अहश्चराय स्वाहा। १४९. ॐ नक्तञ्चराय स्वाहा। १५०. ॐ तिग्ममन्यवे स्वाहा। १५१. ॐ सुवर्चसे स्वाहा। १५२. ॐ गजघ्ने स्वाहा। १५३. ॐ दैत्यघ्ने स्वाहा। १५४. ॐ कालाय स्वाहा। १५५. ॐ लोकधात्रे स्वाहा। १५६. ॐ गुणाकराय

स्वाहा। १५७. ॐ सिंहशार्दूलरूपाय स्वाहा। १५८. ॐ आर्द्रचर्माम्बरा-वृताय स्वाहा। १५९. ॐ कालयोगिने स्वाहा। १६०. ॐ महानादाय स्वाहा। १६१. ॐ सर्वकामाय स्वाहा। १६२. ॐ चतुष्पथाय स्वाहा। १६३. ॐ निशाचराय स्वाहा। १६४. ॐ प्रेतचारिणे स्वाहा। १६५. ॐ भूतचारिणे स्वाहा। १६६. ॐ महेश्वराय स्वाहा। १६७. ॐ बहुभूताय स्वाहा। १६८. ॐ बहुधाराय स्वाहा। १६९. ॐ स्वर्भानवे स्वाहा। १७०. ॐ अमिताय स्वाहा। १७१. ॐ गतये स्वाहा। १७२. ॐ नृत्यप्रियाय स्वाहा। १७३. ॐ नित्यनर्ताय स्वाहा। १७४. ॐ नर्तकाय स्वाहा। १७५. ॐ सर्वलालसाय स्वाहा। १७६. ॐ घोराय स्वाहा। १७७. ॐ महातपसे स्वाहा। १७८. ॐ पाशाय स्वाहा। १७९. ॐ नित्याय स्वाहा। १८०. ॐ गिरिरुहाय स्वाहा। १८१. ॐ नभसे स्वाहा। १८२. ॐ सहस्रहस्ताय स्वाहा। १८३. ॐ विजयाय स्वाहा। १८४. ॐ व्यवसायाय स्वाहा। १८५. ॐ अतन्द्रिताय स्वाहा। १८६. ॐ अघर्षणाय स्वाहा। १८७. ॐ धर्षणात्मने स्वाहा। १८८. ॐ यज्ञघ्ने स्वाहा। १८९. ॐ कामनाशकाय स्वाहा। १९०. ॐ दक्षयागापहारिणे स्वाहा। १९१. ॐ सुमहाय्याय स्वाहा। १९२. ॐ मध्यमाय स्वाहा। १९३. ॐ तेजोपहारिणे स्वाहा। १९४. ॐ बलघ्ने स्वाहा। १९५. ॐ मुदिताय स्वाहा। १९६. ॐ अर्थाय स्वाहा। १९७. ॐ अजिताय स्वाहा। १९८. ॐ अवराय स्वाहा। १९९. ॐ गम्भीराय स्वाहा। २००. ॐ गम्भीराय स्वाहा। २०१. ॐ गंभीरबलवाहनाय स्वाहा। २०२. ॐ न्यग्रोधरूपाय स्वाहा। २०३. ॐ न्यग्रोधाय स्वाहा। २०४. ॐ वृक्षकर्णस्थितये स्वाहा। २०५. ॐ विभवे स्वाहा। २०६. ॐ सुतीक्ष्णदशनाय स्वाहा। २०७. ॐ महाकायाय स्वाहा। २०८. ॐ महाननाय स्वाहा। २०९. ॐ विष्वक्सेनाय स्वाहा। २१०. ॐ हरये स्वाहा। २११. ॐ यज्ञाय स्वाहा। २१२. ॐ संयुगापीडवाहनाय स्वाहा। २१३. ॐ तीक्ष्णतापाय स्वाहा। २१४. ॐ हर्यश्वाय स्वाहा। २१५. ॐ सहाय स्वाहा। २१६. ॐ कर्मकालविदे स्वाहा। २१७. ॐ विष्णुप्रसादिताय स्वाहा। २१८. ॐ यज्ञाय स्वाहा। २१९. ॐ समुद्राय स्वाहा। २२०. ॐ वडवामुखाय स्वाहा। २२१. ॐ हुताशनसहाय स्वाहा। २२२. ॐ प्रशान्तात्मने स्वाहा। २२३. ॐ हुताशनाय स्वाहा। २२४. ॐ उग्रतेजसे स्वाहा। २२५. ॐ महातेजसे स्वाहा। २२६. ॐ जन्याय स्वाहा। २२७. ॐ विजयकालविदे स्वाहा। २२८. ॐ ज्योतिषामयनाय स्वाहा।

२२९. ॐ सिद्धये स्वाहा। २३०. ॐ सर्वविग्रहाय स्वाहा। २३१. ॐ शिखिने स्वाहा। २३२. ॐ मुण्डिने स्वाहा। २३३. ॐ जटिने स्वाहा। २३४. ॐ ज्वालिने स्वाहा। २३५. ॐ मूर्तिजाय स्वाहा। २३६. ॐ मूर्द्धगाय स्वाहा। २३७. ॐ बलिने स्वाहा। २३८. ॐ वेणविने स्वाहा। २३९. ॐ पणविने स्वाहा। २४०. ॐ तालिने स्वाहा। २४१. ॐ खलिने स्वाहा। २४२. ॐ कालकटकटाय स्वाहा। २४३. ॐ नक्षत्रविग्रहमतये स्वाहा। २४४. ॐ गुणबुद्धये स्वाहा। २४५. ॐ लगाय स्वाहा। २४६. ॐ अग्माय स्वाहा। २४७. ॐ प्रजापतये स्वाहा। २४८. ॐ विश्वबाहवे स्वाहा। २४९. ॐ विभागाय स्वाहा। २५०. ॐ सर्वगाय स्वाहा। २५१. ॐ अमुखाय स्वाहा। २५२. ॐ विमोचनाय स्वाहा। २५३. ॐ ससुरणाय स्वाहा। २५४. ॐ हिरण्यकवचोद्भवाय स्वाहा। २५५. ॐ मेढजाय स्वाहा। २५६. ॐ ललचारिणे स्वाहा। २५७. ॐ महीचारिणे स्वाहा। २५८. ॐ स्नुताय स्वाहा। २५९. ॐ सर्वतूर्यनिनादिने स्वाहा। २६०. ॐ सर्वातोद्य-षरिग्रहाय स्वाहा। २६१. ॐ ब्यालरूपाय स्वाहा। २६२. ॐ गुहावासिने स्वाहा। २६३. ॐ गुहाय स्वाहा। २६४. ॐ मालिने स्वाहा। २६५. ॐ तरङ्गविदे स्वाहा। २६६. ॐ त्रिदशाय स्वाहा। २६७. ॐ त्रिकालधृषे स्वाहा। २६८. ॐ कर्मसर्वबन्धविमोचनाय स्वाहा। २६९. ॐ असुरेन्द्राणां स्वाहा। २७०. ॐ युधिशत्रुबिनाशिने स्वाहा। २७१. ॐ सांख्यप्रसादाय स्वाहा। २७२. ॐ दुर्वाससे स्वाहा। २७३. ॐ सर्वसाधुनियेबिताय स्वाहा। २७४. ॐ प्रस्कन्दनाथ स्वाहा। २७५. ॐ बिभागज्ञाय स्वाहा। २७६. ॐ अतुल्याय स्वाहा। २७७. ॐ यज्ञभागविदे स्वाहा। २७८. ॐ सर्वचारिणे स्वाहा। २७९. ॐ सर्ववासाय स्वाहा। २८०. ॐ दुर्वाससे स्वाहा। २८१. ॐ वासवाय स्वाहा। २८२. ॐ अमराय स्वाहा। २८३. ॐ हेमाय स्वाहा। २८४. ॐ हेमकराय स्वाहा। २८५. ॐ अयज्ञसर्वधारिणे स्वाहा। २८६. ॐ धरोत्तमाय स्वाहा। २८७. ॐ लोहिताक्षाय स्वाहा। २८८. ॐ महाक्षाय स्वाहा। २८९. ॐ विजयाक्षाय स्वाहा। २९०. ॐ विशारदाय स्वाहा। २९१. ॐ सर्वकामदाय स्वाहा। २९२. ॐ सर्वकालप्रसादाय स्वाहा। २९३. ॐ सुबलाय स्वाहा। २९४. ॐ बलरूपधृषे स्वाहा। २९५. ॐ संग्रहाय स्वाहा। २९६. ॐ निग्रहाय स्वाहा। २९७. ॐ कर्त्रे स्वाहा। २९८. ॐ सर्पचीरनिवासाय स्वाहा। २९९. ॐ मुख्याय स्वाहा। ३००. ॐ अमुख्याय स्वाहा। ३०१. ॐ देहाय स्वाहा। ३०२. ॐ काहलये

स्वाहा। ३०३. ॐ सर्वकामवराय स्वाहा। ३०४. ॐ सर्वदाय स्वाहा। ३०५. ॐ सर्वतोमुखाय स्वाहा। ३०६. ॐ आकाशनिर्विरूपाय स्वाहा। ३०७. ॐ निपातिने स्वाहा। ३०८. ॐ अवशाय स्वाहा। ३०९. ॐ खगाय स्वाहा। ३१०. ॐ रौद्ररूपाय स्वाहा। ३११. ॐ अंशवे स्वाहा। ३१२. ॐ आदित्याय स्वाहा। ३१३. ॐ बहुरश्मये स्वाहा। ३१४. ॐ सुवर्चसिने स्वाहा। ३१५. ॐ वसुवेगाय स्वाहा। ३१६. ॐ महावेगाय स्वाहा। ३१७. ॐ मनोवेगाय स्वाहा। ३१८. ॐ निशाचराय स्वाहा। ३१९. ॐ सर्ववासिने स्वाहा। ३२०. ॐ श्रियावासिने स्वाहा। ३२१. ॐ उपदेश-कराय स्वाहा। ३२२. ॐ अकराय स्वाहा। ३२३. ॐ मुनये स्वाहा। ३२४. ॐ आत्मनिरालोकाय स्वाहा। ३२५. ॐ सम्भग्नाय स्वाहा। ३२६. ॐ सहस्त्रदाय स्वाहा। ३२७. ॐ पक्षिणे स्वाहा। ३२८. ॐ पक्षरूपाय स्वाहा। ३२९. ॐ अतिदीप्ताय स्वाहा। ३३०. ॐ विशाम्पतये स्वाहा। ३३१. ॐ उन्मादाय स्वाहा। ३३२. ॐ मदनाय स्वाहा। ३३३. ॐ कामाय स्वाहा। ३३४. ॐ अश्वत्थाय स्वाहा। ३३५. ॐ अर्थकराय स्वाहा। ३३६. ॐ यशसे स्वाहा। ३३७. ॐ वामदेवाय स्वाहा। ३३८. ॐ वामाय स्वाहा। ३३९. ॐ प्राचे स्वाहा। ३४०. ॐ दक्षिणाय स्वाहा। ३४१. ॐ वामनाय स्वाहा। ३४२. ॐ सिद्धयोगिने स्वाहा। ३४३. ॐ महषय स्वाहा। ३४४. ॐ सिद्धार्थाय स्वाहा। ३४५. ॐ सिद्धसाधकाय स्वाहा। ३४६. ॐ भिक्षवे स्वाहा। ३४७. ॐ भिक्षरूपाय स्वाहा। ३४८. ॐ विपणाय स्वाहा। ३४९. ॐ मृदवे स्वाहा। ३५०. ॐ अव्ययाय स्वाहा। ३५१. ॐ महासेनाय स्वाहा। ३५२. ॐ विशाखाय स्वाहा। ३५३. ॐ षष्टिभागाय स्वाहा। ३५४. ॐ गवाम्पतये स्वाहा। ३५५. ॐ वज्रहस्ताय स्वाहा। ३५६. ॐ विष्कम्भिने स्वाहा। ३५७. ॐ चमूस्तम्भनाय स्वाहा। ३५८. ॐ वृत्तावृत्तकराय स्वाहा। ३५९. ॐ तालाय स्वाहा। ३६०. ॐ मधवे स्वाहा। ३६१. ॐ मधुकलोचनाय स्वाहा। ३६२. ॐ वाचस्पत्याय स्वाहा। ३६३. ॐ वाजसनाय स्वाहा। ३६४. ॐ आश्रम-पूजिताय स्वाहा। ३६५. ॐ ब्रह्मचारिणे स्वाहा। ३६६. ॐ लाकचारिणे स्वाहा। ३६७. ॐ सवचारिणे स्वाहा। ३६८. ॐ विचारविदे स्वाहा। ३६९. ॐ ईशानाय स्वाहा। ३७०. ॐ ईश्वराय स्वाहा। ३७१. ॐ कालाय स्वाहा। ३७२. ॐ निशाचारिणे स्वाहा। ३७३. ॐ पिनाकधृगे स्वाहा। ३७४. ॐ निमित्तस्थाय स्वाहा। ३७५. ॐ निमित्ताय स्वाहा। ३७६. ॐ

नन्दये स्वाहा। ३७७. ॐ नन्दिकराय स्वाहा। ३७८. ॐ हरये स्वाहा। ३७९. ॐ नन्दीश्वराय स्वाहा। ३८०. ॐ नन्दिने स्वाहा। ३८१. ॐ नन्दराय स्वाहा। ३८२. ॐ नन्दिवर्धनाय स्वाहा। ३८३. ॐ भगहारिणे स्वाहा। ३८४. ॐ निहन्त्रे स्वाहा। ३८५. ॐ कालाय स्वाहा। ३८६. ॐ ब्रह्मणे स्वाहा। ३८७. ॐ पितामहाय स्वाहा। ३८८. ॐ चतुर्मुखाय स्वाहा। ३८९. ॐ महालिङ्गाय स्वाहा। ३९०. ॐ चारुलिङ्गाय स्वाहा। ३९१. ॐ लिङ्गाध्यक्षाय स्वाहा। ३९२. ॐ सुराध्यक्षाय स्वाहा। ३९३. ॐ योगाध्यक्षाय स्वाहा। ३९४. ॐ युगावहाय स्वाहा। ३९५. ॐ बीजाध्यक्षाय स्वाहा। ३९६. ॐ बीजकर्त्रे स्वाहा। ३९७. ॐ अध्यात्मानुगताय स्वाहा। ३९८. ॐ बलाय स्वाहा। ३९९. ॐ इतिहासाय स्वाहा। ४००. ॐ सङ्कल्पाय स्वाहा। ४०१. ॐ गौतमाय स्वाहा। ४०२. ॐ निशाकराय स्वाहा। ४०३. ॐ दम्भाय स्वाहा। ४०४. ॐ अदम्भाय स्वाहा। ४०५. ॐ वैदम्भाय स्वाहा। ४०६. ॐ वश्याय स्वाहा। ४०७. ॐ वशकराय स्वाहा। ४०८. ॐ कलये स्वाहा। ४०९. ॐ लोककर्त्रे स्वाहा। ४१०. ॐ पशुपतये स्वाहा। ४११. ॐ महाकर्त्रे स्वाहा। ४१२. ॐ अनौषधाय स्वाहा। ४१३. ॐ अक्षराय स्वाहा। ४१४. ॐ परब्रह्मणे स्वाहा। ४१५. ॐ बलवते स्वाहा। ४१६. ॐ शक्राय स्वाहा। ४१७. ॐ नीतये स्वाहा। ४१८. ॐ अनीतये स्वाहा। ४१९. ॐ शुद्धात्मने स्वाहा। ४२०. ॐ मान्याय स्वाहा। ४२१. ॐ शुद्धाय स्वाहा। ४२२. ॐ गतागताय स्वाहा। ४२३. ॐ बहुप्रसादाय स्वाहा। ४२४. ॐ सुस्वप्नाय स्वाहा। ४२५. ॐ दर्पणाय स्वाहा। ४२६. ॐ अमित्रजिते स्वाहा। ४२७. ॐ वेदकराय स्वाहा। ४२८. ॐ मन्त्रकराय स्वाहा। ४२९. ॐ विदुषे स्वाहा। ४३०. ॐ समरमर्दनाय स्वाहा। ४३१. ॐ महामेघनिवासिने स्वाहा। ४३२. ॐ महाघोराय स्वाहा। ४३३. ॐ वंशिने स्वाहा। ४३४. ॐ कराय स्वाहा। ४३५. ॐ अग्निज्वालाय स्वाहा। ४३६. ॐ महाज्वालाय स्वाहा। ४३७. ॐ अतिधूम्राय स्वाहा। ४३८. ॐ हुताय स्वाहा। ४३९. ॐ हविषे स्वाहा। ४४०. ॐ वृषणाय स्वाहा। ४४१. ॐ शङ्कराय स्वाहा। ४४२. ॐ वर्चस्विने स्वाहा। ४४३. ॐ धूमकेतनाय स्वाहा। ४४४. ॐ नीलाय स्वाहा। ४४५. ॐ अङ्गलुब्धाय स्वाहा। ४४६. ॐ शोभनाय स्वाहा। ४४७. ॐ निरवग्रहाय स्वाहा। ४४८. ॐ स्वस्तिदाय स्वाहा। ४४९. ॐ स्वस्तिभावाय स्वाहा। ४५०. ॐ भागिने स्वाहा। ४५१. ॐ भागकराय स्वाहा। ४५२. ॐ लघवे

स्वाहा। ४५३. ॐ उत्सङ्गाय स्वाहा। ४५४. ॐ महाङ्गाय स्वाहा। ४५५. ॐ महागर्भपरायणाय स्वाहा। ४५६. ॐ कृष्णवर्णाय स्वाहा। ४५७. ॐ सुवर्णाय स्वाहा। ४५८. ॐ सर्वदेहिनामिन्द्रियाय स्वाहा। ४५९. ॐ महापादाय स्वाहा। ४६०. ॐ महाहस्ताय स्वाहा। ४६१. ॐ महाकायाय स्वाहा। ४६२. ॐ महायशसे स्वाहा। ४६३. ॐ महामूर्ध्ने स्वाहा। ४६४. ॐ महामात्राय स्वाहा। ४६५. ॐ महानेत्राय स्वाहा। ४६६. ॐ निशालयाय स्वाहा। ४६७. ॐ महान्तकाय स्वाहा। ४६८. ॐ महाकर्णाय स्वाहा। ४६९. ॐ महोष्ठाय स्वाहा। ४७०. ॐ महाहनवे स्वाहा। ४७१. ॐ महानाशाय स्वाहा। ४७२. ॐ महाकम्बवे स्वाहा। ४७३. ॐ महाग्रीवाय स्वाहा। ४७४. ॐ श्मशानभाजे स्वाहा। ४७५. ॐ महावक्षसे स्वाहा। ४७६. ॐ महोरस्काय स्वाहा। ४७७. ॐ अन्तरात्मने स्वाहा। ४७८. ॐ मृगालयाय स्वाहा। ४७९. ॐ लम्बनाय स्वाहा। ४८०. ॐ लम्बितोष्ठाय स्वाहा। ४८१. ॐ महामायाय स्वाहा। ४८२. ॐ पयोनिधये स्वाहा। ४८३. ॐ महादन्ताय स्वाहा। ४८४. ॐ महादंष्ट्राय स्वाहा। ४८५. ॐ महाजिह्वाय स्वाहा। ४८६. ॐ महामुखाय स्वाहा। ४८७. ॐ महानखाय स्वाहा। ४८८. ॐ महारोम्णे स्वाहा। ४८९. ॐ महाकेशाय स्वाहा। ४९०. ॐ महाजटाय स्वाहा। ४९१. ॐ प्रसन्नाय स्वाहा। ४९२. ॐ प्रसादाय स्वाहा। ४९३. ॐ प्रत्ययाय स्वाहा। ४९४. ॐ गिरिसाधनाय स्वाहा। ४९५. ॐ स्नेहनाय स्वाहा। ४९६. ॐ अस्नेहनाय स्वाहा। ४९७. ॐ अजिताय स्वाहा। ४९८. ॐ महामुनये स्वाहा। ४९९. ॐ वृक्षा-काराय स्वाहा। ५००. ॐ वृक्षकेतवे स्वाहा। ५०१. ॐ अनलाय स्वाहा। ५०२. ॐ वायुवाहनाय स्वाहा। ५०३. ॐ गण्डनिले स्वाहा। ५०४. ॐ मेरुधाम्ने स्वाहा। ५०५. ॐ देवाधिपतये स्वाहा। ५०६. ॐ अथर्वशीर्षाय स्वाहा। ५०७. ॐ सामास्याय स्वाहा। ५०८. ॐ ऋक्सहस्रामितेक्षणाय स्वाहा। ५०९. ॐ यजुःपादभुजाय स्वाहा। ५१०. ॐ गुह्याय स्वाहा। ५११. ॐ प्रकाशाय स्वाहा। ५१२. ॐ जङ्गमाय स्वाहा। ५१३. ॐ अमोघार्थाय स्वाहा। ५१४. ॐ प्रसादाय स्वाहा। ५१५. ॐ आभिगम्याय स्वाहा। ५१६. ॐ सुदर्शनाय स्वाहा। ५१७. ॐ उपकाराय स्वाहा। ५१८. ॐ प्रियाय स्वाहा। ५१९. ॐ सर्वाय स्वाहा। ५२०. ॐ कनकाय स्वाहा। ५२१. ॐ काञ्चनच्छवये स्वाहा। ५२२. ॐ नाभये स्वाहा। ५२३. ॐ नन्दिकराय स्वाहा। ५२४. ॐ भावाय स्वाहा। ५२५. ॐ

पुष्करस्थपतये स्वाहा। ५२६. ॐ स्थिराय स्वाहा। ५२७. ॐ द्वादशाय स्वाहा। ५२८. ॐ त्रासनाय स्वाहा। ५२९. ॐ आद्याय स्वाहा। ५३०. ॐ यज्ञाय स्वाहा। ५३१. ॐ यज्ञसमाहिताय स्वाहा। ५३२. ॐ नक्ताय स्वाहा। ५३३. ॐ कलये स्वाहा। ५३४. ॐ कालाय स्वाहा। ५३५. ॐ मकराय स्वाहा। ५३६. ॐ कलपूजिताय स्वाहा। ५३७. ॐ सगणाय स्वाहा। ५३८. ॐ गणकराय स्वाहा। ५३९. ॐ भूतवाहनसारथये स्वाहा। ५४०. ॐ भस्मशयाय स्वाहा। ५४१. ॐ भस्मगोप्त्रे स्वाहा। ५४२. ॐ भस्मभूताय स्वाहा। ५४३. ॐ तरवे स्वाहा। ५४४. ॐ गणाय स्वाहा। ५४५. ॐ लोकपाय स्वाहा। ५४६. ॐ अलोकाय स्वाहा। ५४७. ॐ महात्मने स्वाहा। ५४८. ॐ सर्वपूजिताय स्वाहा। ५४९. ॐ शुक्लाय स्वाहा। ५५०. ॐ त्रिशुक्लाय स्वाहा। ५५१. ॐ सम्पन्नाय स्वाहा। ५५२. ॐ शुचये स्वाहा। ५५३. ॐ भूतनिषेविताय स्वाहा। ५५४. ॐ आश्रमस्थाय स्वाहा। ५५५. ॐ क्रियावस्थाय स्वाहा। ५५६. ॐ विश्वकर्मपतये स्वाहा। ५५७. ॐ वराय स्वाहा। ५५८. ॐ विशालशाखाय स्वाहा। ५५९. ॐ ताम्रोष्ठाय स्वाहा। ५६०. ॐ अम्बुजाय स्वाहा। ५६१. ॐ सुनिश्चलाय स्वाहा। ५६२. ॐ कपिलाय स्वाहा। ५६३. ॐ कपिशाय स्वाहा। ५६४. ॐ शुक्लाय स्वाहा। ५६५. ॐ आयुषे स्वाहा। ५६६. ॐ पराय स्वाहा। ५६७. ॐ अपराय स्वाहा। ५६८. ॐ गन्धर्वाय स्वाहा। ५६९. ॐ अदितये स्वाहा। ५७०. ॐ तार्क्ष्याय स्वाहा। ५७१. ॐ सुविज्ञेयाय स्वाहा। ५७२. ॐ सुशारदाय स्वाहा। ५७३. ॐ परश्वधायुधाय स्वाहा। ५७४. ॐ देवाय स्वाहा। ५७५. ॐ अनुकारिणे स्वाहा। ५७६. ॐ सुवान्धवाय स्वाहा। ५७७. ॐ तुम्बवीणाय स्वाहा। ५७८. ॐ महाक्रोधाय स्वाहा। ५७९. ॐ ऊर्ध्वरेतसे स्वाहा। ५८०. ॐ जलेशयाय स्वाहा। ५८१. ॐ उग्राय स्वाहा। ५८२. ॐ वंशकराय स्वाहा। ५८३. ॐ वंशाय स्वाहा। ५८४. ॐ वंशनादाय स्वाहा। ५८५. ॐ आनन्दिताय स्वाहा। ५८६. ॐ सर्वाङ्गरूपाय स्वाहा। ५८७. ॐ मायाविने स्वाहा। ५८८. ॐ सुहृदाय स्वाहा। ५८९. ॐ अनिलाय स्वाहा। ५९०. ॐ अनलाय स्वाहा। ५९१. ॐ बन्धनाय स्वाहा। ५९२. ॐ बन्धकर्त्रे स्वाहा। ५९३. ॐ सुबन्धनविमोचनाय स्वाहा। ५९४. ॐ सयज्ञारये स्वाहा। ५९५. ॐ सकामारये स्वाहा। ५९६. ॐ महादंष्ट्राय स्वाहा। ५९७. ॐ महायुधाय स्वाहा। ५९८. ॐ बहुधानिन्दिताय स्वाहा। ५९९. ॐ शर्वाय स्वाहा।

६००. ॐ शङ्कराय स्वाहा। ६०१. ॐ शङ्कराय स्वाहा। ६०२. ॐ अधनाय स्वाहा। ६०३. ॐ अमरेशाय स्वाहा। ६०४. ॐ महादेवाय स्वाहा। ६०५. ॐ विश्वदेवाय स्वाहा। ६०६. ॐ सुरारिघ्ने स्वाहा। ६०७. ॐ अहिर्बुध्न्याय स्वाहा। ६०८. ॐ अनिलाभाय स्वाहा। ६०९. ॐ चेकिताय स्वाहा। ६१०. ॐ हविषे स्वाहा। ६११. ॐ अजैकपादे स्वाहा। ६१२. ॐ कपालिने स्वाहा। ६१३. ॐ त्रिशङ्कवे स्वाहा। ६१४. ॐ अजिताय स्वाहा। ६१५. ॐ शिवाय स्वाहा। ६१६. ॐ धन्वन्तरये स्वाहा। ६१७. ॐ धूमकेतवे स्वाहा। ६१८. ॐ स्कन्दाय स्वाहा। ६१९. ॐ वैश्रवणाय स्वाहा। ६२०. ॐ धात्रे स्वाहा। ६२१. ॐ शक्राय स्वाहा। ६२२. ॐ विष्णवे स्वाहा। ६२३. ॐ भिन्नाय स्वाहा। ६२४. ॐ त्वष्ट्रे स्वाहा। ६२५. ॐ ध्रुवाय स्वाहा। ६२६. ॐ धराय स्वाहा। ६२७. ॐ प्रभावाय स्वाहा। ६२८. ॐ सवगर्वाय स्वाहा। ६२९. ॐ अर्यम्णे स्वाहा। ६३०. ॐ सवित्रे स्वाहा। ६३१. ॐ रवये स्वाहा। ६३२. ॐ उषङ्गवे स्वाहा। ६३३. ॐ विधात्रे स्वाहा। ६३४. ॐ मान्धात्रे स्वाहा। ६३५. ॐ भूतभावनाय स्वाहा। ६३६. ॐ विभवे स्वाहा। ६३७. ॐ वर्णविभाविने स्वाहा। ६३८. ॐ सर्वकामगुणावहाय स्वाहा। ६३९. ॐ पद्मनाभाय स्वाहा। ६४०. ॐ महागर्भाय स्वाहा। ६४१. ॐ चन्द्रवक्त्राय स्वाहा। ६४२. ॐ अनिलाय स्वाहा। ६४३. ॐ अनलाय स्वाहा। ६४४. ॐ बलवते स्वाहा। ६४५. ॐ उपशान्ताय स्वाहा। ६४६. ॐ पुराणाय स्वाहा। ६४७. ॐ पुण्यचञ्चवे स्वाहा। ६४८. ॐ इत्यै स्वाहा। ६४९. ॐ कुरुकर्त्रे स्वाहा। ६५०. ॐ कुरुवासिने स्वाहा। ६५१. ॐ पुरुहूताय स्वाहा। ६५२. ॐ गुणौषधाय स्वाहा। ६५३. ॐ सर्वाशयाय स्वाहा। ६५४. ॐ दर्भचारिणे स्वाहा। ६५५. ॐ सर्वप्राणिपतये स्वाहा। ६५६. ॐ देवदेवाय स्वाहा। ६५७. ॐ सुखासक्ताय स्वाहा। ६५८. ॐ सदसते स्वाहा। ६५९. ॐ सर्वरत्नविदे स्वाहा। ६६०. ॐ कैलाशगिरिवासिने स्वाहा। ६६१. ॐ हिमवद्गिरिसंश्रयाय स्वाहा। ६६२. ॐ कूलहारिणे स्वाहा। ६६३. ॐ कूलकर्त्रे स्वाहा। ६६४. ॐ बहुविद्याय स्वाहा। ६६५. ॐ बहुप्रदाय स्वाहा। ६६६. ॐ वणिजाय स्वाहा। ६६७. ॐ वर्धकिने स्वाहा। ६६८. ॐ वृक्षाय स्वाहा। ६६९. ॐ बकुलाय स्वाहा। ६७०. ॐ चन्दनाय स्वाहा। ६७१. ॐ छन्दाय स्वाहा। ६७२. ॐ सारग्रीवाय स्वाहा। ६७३. ॐ महाजत्रवे स्वाहा। ६७४. ॐ अलोलाय स्वाहा। ६७५. ॐ

महौषधाय स्वाहा। ६७६. ॐ सिद्धार्थकारिणे स्वाहा। ६७७. ॐ छन्दोव्याकरणोत्तरसिद्धार्थाय स्वाहा। ६७८. ॐ सिंहनादाय स्वाहा। ६७९. ॐ सिंहद्रष्ट्राय स्वाहा। ६८०. ॐ सिंहगाय स्वाहा। ६८१. ॐ सिंहवाहनाय स्वाहा। ६८२. ॐ प्रभावात्मने स्वाहा। ६८३. ॐ जगत्कालस्थानाय स्वाहा। ६८४. ॐ लोकहिताय स्वाहा। ६८५. ॐ तरवे स्वाहा। ६८६. ॐ सारङ्गाय स्वाहा। ६८७. ॐ नवचक्राङ्गाय स्वाहा। ६८८. ॐ केतुमालिने स्वाहा। ६८९. ॐ सभायनाय स्वाहा। ६९०. ॐ भूतालयाय स्वाहा। ६९१. ॐ भूतपतये स्वाहा। ६९२. ॐ अहोरात्राय स्वाहा। ६९३. ॐ अनिन्दिताय स्वाहा। ६९४. ॐ सर्वभूतवाहत्रे स्वाहा। ६९५. ॐ सर्वभूतनिलयाय स्वाहा। ६९६. ॐ विभवे स्वाहा। ६९७. ॐ भवाय स्वाहा। ६९८. ॐ अमोघाय स्वाहा। ६९९. ॐ संयताय स्वाहा। ७००. ॐ अश्वाय स्वाहा। ७०१. ॐ भोजनाय स्वाहा। ७०२. ॐ प्राणधारणाय स्वाहा। ७०३. ॐ धृतिमते स्वाहा। ७०४. ॐ मतिमते स्वाहा। ७०५. ॐ दक्षाय स्वाहा। ७०६. ॐ सत्कृताय स्वाहा। ७०७. ॐ युगाधिपाय स्वाहा। ७०८. ॐ गोपालाय स्वाहा। ७०९. ॐ गोपतये स्वाहा। ७१०. ॐ ग्रामाय स्वाहा। ७११. ॐ गोचर्मवसनाय स्वाहा। ७१२. ॐ हरये स्वाहा। ७१३. ॐ हिरण्यबाहवे स्वाहा। ७१४. ॐ प्रवेशिनां गुहापालाय स्वाहा। ७१५. ॐ प्रकृष्टारये स्वाहा। ७१६. ॐ महाहर्षाय स्वाहा। ७१७. ॐ जितकामाय स्वाहा। ७१८. ॐ जितेन्द्रियाय स्वाहा। ७१९. ॐ गान्धाराय स्वाहा। ७२०. ॐ सुवासाय स्वाहा। ७२१. ॐ तपःसक्ताय स्वाहा। ७२२. ॐ रतये स्वाहा। ७२३. ॐ नराय स्वाहा। ७२४. ॐ महागीताय स्वाहा। ७२५. ॐ महानृत्याय स्वाहा। ७२६. ॐ अप्सरोगणसेविताय स्वाहा। ७२७. ॐ महाकेतवे स्वाहा। ७२८. ॐ महाधातवे स्वाहा। ७२९. ॐ नैकसानुचराय स्वाहा। ७३०. ॐ चलाय स्वाहा। ७३१. ॐ आवेदनीयाय स्वाहा। ७३२. ॐ आदेशाय स्वाहा। ७३३. ॐ सर्वगन्धसुखाबहाय स्वाहा। ७३४. ॐ तोरणाय स्वाहा। ७३५. ॐ तारणाय स्वाहा। ७३६. ॐ वाताय स्वाहा। ७३७. ॐ परिधिने स्वाहा। ७३८. ॐ पतिखेचराय स्वाहा। ७३९. ॐ संयोगवर्धनाय स्वाहा। ७४०. ॐ गुणाधिकवृद्धाय स्वाहा। ७४१. ॐ अधिकवृद्धाय स्वाहा। ७४२. ॐ नित्यात्मसहाय स्वाहा। ७४३. ॐ देवासुरपतये स्वाहा। ७४४. ॐ पत्ये स्वाहा। ७४५. ॐ युक्ताय स्वाहा। ७४६. ॐ युक्तबाहवे स्वाहा। ७४७. ॐ दिविसुपर्वदेवाय

स्वाहा। ७४८. ॐ आषाढाय स्वाहा। ७४९. ॐ सुषाढाय स्वाहा। ७५०. ॐ ध्रुवाय स्वाहा। ७५१. ॐ हरिणाय स्वाहा। ७५२. ॐ हराय स्वाहा। ७५३. ॐ आवर्तमानवपुषे स्वाहा। ७५४. ॐ वसुश्रेष्ठाय स्वाहा। ७५५. ॐ महापथाय स्वाहा। ७५६. ॐ विमर्षशिरोहारिणये स्वाहा। ७५७. ॐ सर्वलक्षणलक्षिताय स्वाहा। ७५८. ॐ अक्षरयोगिने स्वाहा। ७५९. ॐ सर्वयोगिने स्वाहा। ७६०. ॐ महाबलाय स्वाहा। ७६१. ॐ समाम्नायाय स्वाहा। ७६२. ॐ असमाम्नायाय स्वाहा। ७६३. ॐ तीर्थ-देवाय स्वाहा। ७६४. ॐ महारथाय स्वाहा। ७६५. ॐ निर्जीवाय स्वाहा। ७६६. ॐ जीवनाय स्वाहा। ७६७. ॐ मन्त्राय स्वाहा। ७६८. ॐ शुभाक्षाय स्वाहा। ७६९. ॐ बहुकर्कशाय स्वाहा। ७७०. ॐ रत्नप्रभूताय स्वाहा। ७७१. ॐ रत्नाङ्गाय स्वाहा। ७७२. ॐ महार्णवनिपानविदे स्वाहा। ७७३. ॐ मूलाय स्वाहा। ७७४. ॐ त्रिशूलाय स्वाहा। ७७५. ॐ अमृताय स्वाहा। ७७६. ॐ व्यक्ताव्यक्ताय स्वाहा। ७७७. ॐ तपोनिधय स्वाहा। ७७८. ॐ आरोहणाय स्वाहा। ७७९. ॐ अधिरोधाय स्वाहा। ७८०. ॐ शीलधारिणे स्वाहा। ७८१. ॐ महायशसे स्वाहा। ७८२. ॐ सेनाकल्पाय स्वाहा। ७८३. ॐ महाकल्पाय स्वाहा। ७८४. ॐ योगाय स्वाहा। ७८५. ॐ युगकराय स्वाहा। ७८६. ॐ हरये स्वाहा। ७८७. ॐ युगरूपाय स्वाहा। ७८८. ॐ महारूपाय स्वाहा। ७८९. ॐ महागहनाय स्वाहा। ७९०. ॐ वधाय स्वाहा। ७९१. ॐ न्यायनिर्वपणाय स्वाहा। ७९२. ॐ पादाय स्वाहा। ७९३. ॐ पण्डिताय स्वाहा। ७९४. ॐ अचलोपमाय स्वाहा। ७९५. ॐ बहुमालाय स्वाहा। ७९६. ॐ महामालाय स्वाहा। ७९७. ॐ शशिहरसुलोचनाय स्वाहा। ७९८. ॐ विस्तारलवणकूपाय स्वाहा। ७९९. ॐ त्रियुगाय स्वाहा। ८००. ॐ सफलोदयाय स्वाहा। ८०१. ॐ त्रिनेत्राय स्वाहा। ८०२. ॐ विषाणाङ्गाय स्वाहा। ८०३. ॐ मणिविद्धाय स्वाहा। ८०४. ॐ जटाधराय स्वाहा। ८०५. ॐ विन्दवे स्वाहा। ८०६. ॐ विसर्गाय स्वाहा। ८०७. ॐ सुमुखाय स्वाहा। ८०८. ॐ शराय स्वाहा। ८०९. ॐ सर्वायुधाय स्वाहा। ८१०. ॐ सहाय स्वाहा। ८११. ॐ निवेदनाय स्वाहा। ८१२. ॐ सुखजाताय स्वाहा। ८१३. ॐ सुगन्धाराय स्वाहा। ८१४. ॐ महाधनुषे स्वाहा। ८१५. ॐ गन्धपालिभगवते स्वाहा। ८१६. ॐ सर्वर्मोत्थानाय स्वाहा। ८१७. ॐ मन्थानबहुलबाहवे स्वाहा। ८१८. ॐ सकलाय स्वाहा। ८१९. ॐ

सर्वलोचनाय स्वाहा। ८२०. ॐ तलस्तालाय स्वाहा। ८२१. ॐ करस्थ-लिने स्वाहा। ८२२. ॐ ऊर्ध्वसंहननाय स्वाहा। ८२३. ॐ महते स्वाहा। ८२४. ॐ छत्राय स्वाहा। ८२५. ॐ सुच्छत्राय स्वाहा। ८२६. ॐ विख्यातलोकाय स्वाहा। ८२७. ॐ सर्वाश्रयक्रमाय स्वाहा। ८२८. ॐ मुण्डाय स्वाहा। ८२९. ॐ विरूताय स्वाहा। ८३०. ॐ विकृताय स्वाहा। ८३१. ॐ दण्डिने स्वाहा। ८३२. ॐ कुण्डिने स्वाहा। ८३३. ॐ विकुर्वाणाय स्वाहा। ८३४. ॐ हर्यक्षाप स्वाहा। ८३५. ॐ ककुभाय स्वाहा। ८३६. ॐ वज्रिणे स्वाहा। ८३७. ॐ शतजिह्वाय स्वाहा। ८३८. ॐ सहस्त्रपदे स्वाहा। ८३९. ॐ सहस्त्रमूर्ध्ने स्वाहा। ८४०. ॐ देवेन्द्राय स्वाहा। ८४१. ॐ सर्वदेवमायाय स्वाहा। ८४२. ॐ गुरवे स्वाहा। ८४३. ॐ ओं सहस्त्रबाहवे स्वाहा। ८४४. ॐ सर्वाङ्गाय स्वाहा। ८४५. ॐ शरण्याय स्वाहा। ८४६. ॐ सर्वलोककृते स्वाहा। ८४७. ॐ पवित्राय स्वाहा। ८४८. ॐ त्रिककुन्मन्त्राय स्वाहा। ८४९. ॐ कनिष्ठाय स्वाहा। ८५०. ॐ कृष्णपिंगलाय स्वाहा। ८५१. ॐ ब्रह्मदण्डविनिर्मात्रे स्वाहा। ८५२. ॐ शतघ्नीपाशशक्तिमते स्वाहा। ८५३. ॐ पद्मगर्भाय स्वाहा। ८५४. ॐ महागर्भाय स्वाहा। ८५५. ॐ ब्रह्मगर्भाय स्वाहा। ८५६. ॐ जलजोद्भवाय स्वाहा। ८५७. ॐ गभस्तये स्वाहा। ८५८. ॐ ब्रह्मकृते स्वाहा। ८५९. ॐ ब्रह्मिणे स्वाहा। ८६०. ॐ ब्रह्मविदे स्वाहा। ८६१. ॐ ब्राह्मणाय स्वाहा। ८६२. ॐ गतये स्वाहा। ८६३. ॐ अनन्तरूपाय स्वाहा। ८६४. ॐ नैकात्मने स्वाहा। ८६५. ॐ स्वयंभुवतिग्मतेजसे स्वाहा। ८६६. ॐ ऊर्ध्व-गात्मने स्वाहा। ८६७. ॐ पशुपतये स्वाहा। ८६८. ॐ घातरंहसे स्वाहा। ८६९. ॐ मनोजवाय स्वाहा। ८७०. ॐ चन्दनिने स्वाहा। ८७१. ॐ पद्मनालाग्राय स्वाहा। ८७२. ॐ सुरभ्युत्तारणाय स्वाहा। ८७३. ॐ नराय स्वाहा। ८७४. ॐ कर्णिकारमहास्त्रग्विणे स्वाहा। ८७५. ॐ नीलमौलये स्वाहा। ८७६. ॐ पिनाकधृषे स्वाहा। ८७७. ॐ उमापतये स्वाहा। ८७८. ॐ उमाकान्ताय स्वाहा। ८७९. ॐ जाह्नवीधृषे स्वाहा। ८८०. ॐ उमाधवाय स्वाहा। ८८१. ॐ वरवराहाय स्वाहा। ८८२. ॐ वरदाय स्वाहा। ८८३. ॐ वरेण्याय स्वाहा। ८८४. ॐ सुमहास्वनाय स्वाहा। ८८५. ॐ महाप्रसादाय स्वाहा। ८८६. ॐ दमनाय स्वाहा। ८८७. ॐ शत्रुघ्ने स्वाहा। ८८८. ॐ श्वेतपिङ्गलाय स्वाहा। ८८९. ॐ पीतात्मने स्वाहा। ८९०. ॐ परमात्मने स्वाहा। ८९१. ॐ प्रयतात्मने स्वाहा।

